हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
पञ्चमः प्रपाठकः ॥ ५ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठके पञ्चविंशोऽनुवाकः ) ।

अथान्तिमेऽनुवाके सर्वजगदात्मकत्वेनाश्वः स्तूयते । अथवा विराड्रूपेणाश्वोपासनप्रतिपादकोऽयमनुवाकः प्रकरणादुत्कृष्योपनिषदादौ द्रष्टव्यः । अत एव वाजसनेयिन एतदर्थप्रतिपादकं ब्राह्मणमुपनिषदादावामनन्ति ।

पाठस्तु—

यो वा अश्वस्येति । यः पुमान्मेध्यस्य यागयोग्यस्याश्वस्य शिरो वेद शिरःप्रभृतीनवयवान्विराडवयवभूतोषःकालादिरूपेणोपास्ते सोऽयं शीर्षण्वानुषःकालादिरूपैः शिरःप्रभृतिभिर्विराडवयवैर्युक्तो मेध्यो यागफलयोग्यो भवति । क्रत्वनुष्ठानस्य चोपासनस्य च समानं फलम् । तथा च पञ्चमकाण्डे समाम्नातम्—‘ सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद ’ इति । तत्र कस्मिन्नश्वावयवे को विराडवयवो ध्यातव्य इति तत्सर्वमुच्यते—मेध्यस्याश्वस्य यच्छिरस्तदुषा उषःकालरूपम् । यदश्वस्य चक्षुस्तत्सूर्यः । यस्तदीयः प्राणः सोऽयं बाह्यो वायुः । यत्तदीयं श्रोत्रं सोऽयं चन्द्रमाः । ये तदीयाः पादास्ताः प्राच्या दिशः । ये पर्शवः पार्श्वास्थिविशेषास्ता इमा आग्नेय्याद्यवान्तरदिशाः । यस्तदीयो निमेष उन्मेषसहितस्ते उभे अहोरात्रे । यानि तदीयहस्तपादगतपर्वाणि ते शुक्लकृष्णपक्षरूपा अर्धमासाः । यानि च पर्वणां संधानानि ते चैत्राद्या मासाः । यानि चानुक्तविशेषाणि खुराद्यङ्गानि ते वसन्ताद्या ऋतवः । य आत्मा मध्यदेहः स संवत्सरकालः । ये तदीयाः केशास्ते सूर्यरश्मयः । यदश्वस्य भास्वररूपं तानि कृत्तिकादिनक्षत्राणि । यान्यनुकान्यस्थानि तानि बृहस्पतिशुक्रप्रभृत्याद्याः प्रौढतारकाः । यानि तत्र तत्र स्थितानि मांसखण्डानि तदेतन्नभः । यानि क्षुद्रलोमानि ता ओषधयः । ये वालाः पुच्छगता दीर्घकेशास्ते वनस्पतयः । यदेतन्मुखं संपद्यतेऽयं लोकप्रसिद्धोऽग्निः । यद्व्यात्तं मुखविदारणं सोऽयं वैश्वानरनामको देवताविशेषः । यदुदरं सोऽयं समुद्रः । यः पायुस्तदन्तरिक्षम् । यावाण्डौ ते द्यावापृथिव्यौ । यः शेपः

(अश्वमेधाङ्गमन्त्रकथनम्)

सोऽयमभिषवार्थो ग्रावा । यद्रुतः स सोमरसः । यज्जंजभ्यते गात्राणि विनामयति सेयं विद्युत् । यद्विधूनुते सशब्दं शरीरं कम्पयति तदेतद्गर्जनम् । यदेतन्मेहनं सेयं वृष्टिः । अस्य हेषाशब्दरूपा या वाक्सेयं वेदरूपा वागेव । जायमानस्य क्रतौ प्रयुज्यमानस्याश्वस्य यः संज्ञपनात्पुरस्तान्महिमाख्यो राजतग्रहस्तदिदमहरेव । एवं पश्चादेतस्याश्वस्य संज्ञपनादूर्ध्वं यो महिमाख्यः सौवर्णग्रहः सेयं रात्रिः । एतावेवोभौ महिमानौ ग्रहावश्वमभितः संबभूवतुरश्वस्य संज्ञपनात्पूर्वं पश्चाच्च व्यवस्थितौ । हयार्ववाज्यश्वा अवान्तरजातिविशेषास्तत्तद्रूपेण देवादीन्वहन्ति । एवंविधस्य विराड्रूपस्याश्वस्य समुद्र एव योनिः कारणम् । सम्यगुद्द्रवत्युत्पद्यते जगदस्मादिति समुद्रः परमात्मा । नह्यन्यस्मादयं विराडुत्पत्तुमर्हति । स एवास्य बन्धुः स्तम्भः स्थितिहेतुरित्यर्थः । एवमुपासिता पापक्षयद्वारा विराड्रूपं प्राप्नोति । 'तं यथा यथोपासते तथैव भवति' इति श्रुत्यन्तरात् । विराट्प्राप्तिश्च क्रममुक्तिहेतुः । तत्र ज्ञानोत्पत्तौ सत्यां तेन विराजा सह मुच्यमानत्वात् । तथा च स्मृतिः—

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति ॥

एतच्च भगवान्व्यासः 'कार्यात्यये तदध्यक्षेणातः परमभिधानात्' इत्यस्मिन्नधिकरणे महता प्रबन्धेन प्रतिपादयामासेत्यशेषमतिमङ्गलम् ।

अथास्य प्रपाठकस्य विनियोगसंग्रहः—

विहितं पञ्चमस्याऽऽद्ये गवामयनसत्रकम् ।
तद्द्वैविध्यं द्वितीये स्यात्तृतीये पृष्ठनिर्णयः ॥
चतुर्थे व्यत्ययः पूर्वपक्षस्यान्त्यस्य पक्षसि ।
पञ्चमे संसवः षष्ठे भवेदुत्सर्गसत्रकम् ॥
तन्मीमांसा सप्तमे स्यादष्टमे तु महाव्रतम् ।
सामानि नवमे प्रोक्ता वीणाद्या दशमे पुनः ॥
दासीनृत्यं ततस्तूर्ध्वं मन्त्राश्चैवाश्वमेधगाः ।
पृष्य(थ्य)न्नहोमाः पञ्चाशदेकपञ्चाशदीरिताः ॥
दत्वते परिधीनां तु कस्त्वामन्त्रत्रयं भवेत् ।
अग्नये सर्वपृष्ठेष्टिः प्रयोगोऽनन्तरे श्रुतः ॥

( अश्वमेधाङ्गमन्त्रकथनम् )

यः प्राणतो य आत्मदेति तावुभौ महिमग्रहौ ।
आ ब्रह्मन्दशभिर्मन्त्रैर्ब्रह्मवर्चसहोमकः ॥
आऽक्रान्तर्थं मन्त्रयेत जज्ञीति(पञ्च)दशभिर्हुतिः ।
आग्ने नैमित्तिका यागा मृगारेष्टिरथाग्नये ॥
अग्न सैनतिहोमाः स्युर्दश ये स्वामिवाचनम् ।
[ * नमस्त्रिभिरुपस्थानं यो वै विधिरुपासने ॥
क्रतुराडश्वमेधोऽयं विराड्ध्यानमुपास्तिराट् ] ।
ताभ्यामुत्पद्यते ज्ञानं कृतकृत्यो भवत्यतः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके पञ्चविंशोऽनुवाकः ॥ २५ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमः प्रपाठकः ॥ ५ ॥

---

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमः काण्डः ॥ ७ ॥

---

* धनुश्चिह्नान्तर्गतस्थाने क. पुस्तके ‘ यो वा अश्वोपास्तिरित्थं कर्मविधे प्रपञ्चिते ’ इत्यर्धमेव विद्यते ।

मूलक्रमेण सप्तमाष्टके--प्र० ५ अ० १७

भाष्यक्रमेण सप्तमकाण्डे-प्र० ५ अ० १७

मूलक्रमेणाऽऽदितः समष्ट्यङ्काः—अष्ट० ७ प्र० ४४ अ० ६३१

भाष्यक्रमेणाऽऽदितः समष्ट्यङ्काः—का० ७ प्र० ४४ अ० ३२६

समाप्तेयं श्रीमत्सायणाचार्यविरचितभाष्यसमेता
कृष्णयजुर्वेदीयतैत्तिरीयसंहिता ॥